जरया परिभूता ये ये व्याधि विकलीकृताः।
येषा क्वापि गतिर्नास्ति तेषां वाराणसी गतिः।।
पदे पदे समाक्रान्ता ये विपद्भिरहर्निशम्।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः।।
पापराशिभिराक्रान्ता ये दारिद्र्य पराजिताः।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः।।
संसारभयभीता ये ये बद्धाः कर्मबन्धनैः।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः।।
श्रुति स्मृतिविहीना ये शौचाचार विवर्जिताः।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः।।
ये च योगपरिभ्रष्टास्तपोदान-विवर्जिताः।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः।।

—काशी रहस्य

जो माता-पिता और भाई-बन्धुओं से परित्यक्त है जिनका कोई आश्रय नहीं है उनके लिए वाराणसी आश्रय है। जो व्यक्ति जरा वृद्धावस्था से पीड़ित है तथा जो व्यक्ति रोग से विकल किये गये हैं जिनका कोई आश्रय नहीं है उनका एकमात्र आश्रय वाराणसी है। जो व्यक्ति पद-पद पर विपत्तियों से रातदिन (चिन्तामग्न) और दुःख-संकट से घिरे हुए हैं, आक्रान्त हैं, जिनका कोई सहारा नहीं है ऐसे दुःखी व्यक्तियों को वाराणसी ही धर्म, अर्थ काम, मोक्ष प्रदान करती है। जो श्रुति स्मृति से विहीन एवं शौचाचार से रहित है तथा जो योग से भ्रष्ट एवं तप, दान आदि से रहित हैं, जिनका कोई आश्रय नहीं है ऐसे व्यक्तियों का एकमात्र आश्रय वाराणसी ही है।

# स्तुति-प्रकरण

## श्रीसङ्कटनाशम् गणेशस्तोत्रम

प्रणम्य शिरसा देवं गौरीपुत्रं विनयकम्।
भक्तावासं स्मरेन्नित्यमायुष्कामार्थसिद्धये।।१।।
प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम्।
तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम्।।२।।
लम्बोदरं पञ्चमं च षष्ठं विकटमेव च।
सप्तमं विघ्नराजं च धूम्रवर्ण तथाष्टामम।।३।।
नवमं भालचन्द्रं च दशमं तु विनायकम्।
एकादशं गणपतिं द्वादशं तु गजाननम्।।४।।
द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः।
न च विघ्नभयं तस्य सर्वसिद्धिकरं प्रभो।।५।।
विद्यार्थी लभते विद्यां धनार्थी लभते धनम्।
पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम्।।६।।
जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत्।
संवत्सरेण सिद्धिं च लभते नात्र संशयः।।७।।
अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत्।
तस्य विद्या भवेत् सर्वा गणेशस्य प्रसादतः।।८।।

।। श्री नारदपुराणे सङ्कष्टनाशनं नाम गणेशस्तोत्रं सम्पूर्णम्।।

## श्रीगणपत्यथर्वशीर्षम्

हरिः ॐ ।। नमस्ते गणपतये। त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्तासि। त्वमेव केवलं धर्तासि। त्वमेव केवलं हर्तासि। त्वमेव

सर्वं खल्विदं ब्राह्मासि। त्वं साक्षादात्मासि नित्यम्। ऋतं वच्मि। सत्यं वच्मि। अव त्वं माम्। अव वक्तारम्। अव श्रोतारम्। अव धातारम्। अवानूचा मव शिष्यम। अव पश्चात्तात। अव पुरस्तात्। अव चोत्तरात्तात्। अव दक्षिणात्तात्। अव चोर्ध्वात्तत्। सर्वतो मां पाहि पाहि समन्तात्। त्वं वाङ्मयस्त्वं चिन्मयः। त्वामानन्द-मयंस्त्वं ब्रह्ममयः। त्वं सच्चिदानन्दाद्वितीयोऽसि। त्वं प्रत्यक्षं ब्रह्मासि। त्वं ज्ञानमयो विज्ञानमयोऽसि। सर्व जगदिदं त्वत्तासि तष्ठति। सर्वं जगदिदं त्वयि लयमेष्यति। सर्व जगदिदं त्वयि प्रत्येति त्वं भूमिरापोडन लोइनिलां नभः। सर्वं जगदिदं वाक्यपदानि। त्वं गुणत्रयातीतः। त्वं कालत्रयातीतः। त्वं देहत्रयातीतः। त्वं मूलाधार-स्थितिऽसि नित्यम्। त्वं शक्तित्रयात्मकः। त्वां योगिनो ध्यायन्ति नित्यम्। त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रास्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्तं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवः सुवरोम्। गणादिं पूर्वमुच्चार्य वार्णदिं तदनन्तरम्। अनुस्वारः परतरः। अर्धेन्दुलसितम्।।१।। तारेण रूद्धम्। एतत्तव मनुस्वरूपम्। गकारः पूर्वस्पम्। अकारो मध्यमरूपम्। अनुस्वार-श्चान्त्यरूपम्। बिन्दुरुत्तररूपम्। नादः सन्धानम्। संहिता सन्धिः सैषा गणेशविद्या। गणक ऋषिः निचृद्गायत्री छन्दः। श्रीमहागणपति-देंवता। ॐ गम्। (गणपतये नमः।) एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्।। एकदन्तं चतुर्हस्तं पाशमङ्कुश-धारिणम्। अभयं वरदं हस्तैर्ब्रिभ्राणं मूषकध्वजम्।। रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम्। रक्तगन्धानुलिप्ताङ्ग रक्तपुष्पैः सुपूजितम्। भक्तानुकम्पिनं देवं जगत्कारणमच्युतम्।आविर्भूतं च सृष्टयादौ प्रकृतैः पुरुषात्परम्।।एवं ध्यायति यो नित्यं स योगी योगिनां वरः। नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्नविनाशिने शिवसुताय श्रीवरदमूर्तये नमो नमः।। सर्वशिरो योऽधीते सब्रह्माभूयाय कल्पते। पञ्चमहापातकोपतातकात् प्रमु सायमधीयानो दिवसकृतं पापं नाशयति प्रातरधीयानो रात्रि पापं नाशयति। सायं प्रातः प्रयुञ्जतिनोऽपापो भवति। धर्मार्थकाममोक्षं च विन्दति। इदमथर्वशीर्षमशिष्याय

न देयम्। यो यदि मोहाद्दास्यायित स पापीयान् भवति। सहस्रावर्तनाद्यं यं काममधीते तं तमनेन साधयेत्। अनेन गणपतिमभिषिञ्चति स वाग्मी भवति। चतुर्थ्यामनश्नञ्जपति स विद्यावान् भवति। इत्यथर्वणवाक्यम्। ब्रह्माद्याचरणं विद्यात्। न बिभेति कदाचनेति। यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति। यो लाजैर्यजति स यशोवान् भवति। स मेधावान् भवति। यो मोदकसहस्रेण यजति स वाञ्छितफलमवाप्नोति। यः साज्यग्रहयित्वा सूर्यवर्चस्वी भवति। सूर्यग्रहे महानद्यां प्रतिमासंनिधौ वां जप्त्वा सिद्धमन्त्रो भवति। महाविघ्नात् प्रमुच्यते। महापापात् प्रमुच्यते। महादोषात् प्रमुच्यते। स सर्वविद्भवति। स सर्वविद्भवति। स सर्वविद्भवति। य एवं वेद।। ॐ भाद्रङ्कर्णेभिरिति शान्तिः।।

।।इति श्रीगणपत्यथर्वशीर्षम्।।

# अन्नपूर्णास्तोत्रम्

नित्यानन्दकरी वराभकरी सौन्दर्यरत्नाकरी
निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी।
प्रालेयाचलवंशपावनकारी काशीपुराधीश्वरी
भिक्षांदेहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी।।१।।

नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी
हेमाम्बराडम्बरी मुक्ताहारविलम्बमानविलसद्वक्षोजकुम्भान्तरी।
काश्मीरागरूवासिताङ्गरुचिरे काशीपुराधीश्वरी।।भिक्षां देहि०।।२।।

योगानन्दकरी रिपुक्षयकरी धर्माथनिष्ठाकरी
चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी।
सर्वैश्वर्यसमस्तवाञ्छितकरी काशीपुराधीश्वरी।।भिक्षां देहि०।।३।।

कैलासाचलकन्दरालयकरी गौरी उमा शङ्करी
कौमारी निगमार्थगोचरकरी ओंकारबीजाक्षरी।
मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी।।भिक्षां देहि०।।४।।

दृश्यदृश्यविभूतिवाहनकरी ब्रह्माण्डभाण्डोदरी
लीलानाटकसूत्रभेदनकरी विज्ञानदीपाङ्कुरी।
श्रीविश्वेशमनः प्रसादनकरी काशीपुराधीश्वरी।।भिक्षां देहि०।।५।।

उर्वीसर्वजनेश्वरीभगवती मातान्नपूर्णेश्वरी
वेणीनीलसमानकुन्तलहरी नित्यान्नदानेश्वरी।
सर्वानदकरी सदा शुभकरी काशीपुराधीश्वरी।।भिक्षां देहि०।।६।।

आदिक्षान्तसमस्तवर्णनकरी शम्भोस्त्रिभावाकरी
काश्मीरात्रिजलेश्वरी त्रिलहरी नित्याङ्कुरा शर्वरी।
कामाकाङ्क्षकरी जनोदयकरी काशीपुराधीश्वरी।।भिक्षां देहि०।।७।।

देवी सर्वविचित्ररत्नचिता दाक्षायणी सुन्दरी
वामं स्वादु पयोधरप्रियकरी सौभाग्यमाहेश्ववरी।
भक्ताभीष्टकरीसदाशुभकरी काशीपुराधीध्वरी।।भिक्षां देहि०।।८।।

चन्द्रार्कानलकोटिकोटिसदृशा चन्द्रांशुबिम्बाधरी
चन्द्रार्काग्निसमानकुन्तलधरी चन्द्रांकवर्णेश्वरी।
मालापुस्तकपाशसाकुंशधरी काशीपुराधीश्वरी।। भिक्षां देहि०।।९।।

क्षत्रत्राणकरी महाऽभवकरी माता कृपासागरी
साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरश्रींधरी।
दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी।। भिक्षां देहि०।।१०।।

अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति।।११।।

माता च पार्वती देवी पिता देवो महेश्वरः।
बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम्।।१२।।

इति श्रीमत्परमहंसपरिव्रजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ अन्नापूर्णास्तोत्रं सम्पूर्णम्।।

# श्रीकनकधारास्तोत्रम्

अङ्गं हरेः पुलकभूषणमाश्रयन्ती भृङ्गाङ्गनेव मुकुलभारणं तमालम्।
अङ्गीकृताशिलविभूतिरपाङ्गलीला माङ्गल्यदाऽस्तु मम मङ्गलदेवतायाः।।१।।
मुग्धा मुहुर्विदधती वदने मुरारेः प्रेमत्रपाप्रणिहितानि गतागतानि।
मालादृशोर्मधुकरीव महोत्पले या सा मे श्रियं दिशय सागर सम्भवायाः।।२।।
विश्वामरेन्द्रपदविभ्रदानदक्षमानन्दहेतुरधिकं मुरविद्विषोऽपि।
ईषन्निर्षीदतु मयि क्षणमीक्षणार्धमिन्दीवरोदरसहोदरमिन्दिरायाः।।३।।
आमीलिताक्षधिगम्य मुदा मुकुन्दमानन्दकन्दमनिमेषमनङ्गतन्त्रम्।
आकेकरस्थितकनीनिकपक्ष्मनेत्रं भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः।।४।।
वाह्वन्तरे मधुजितः श्रितकौस्तुभे या हारावलीव हरिनीलमयी विभाति।
कामप्रदा भगवतोऽपि कटाक्षमाला कल्याणमावहतु से कमलालयायाः।।५।।
कालाम्वुदालिलालितोरसि कैटभारेर्धाराधरे स्फुरति या तडिदङ्गनेव
मातुः समस्तजगतां महनीयमूर्तिर्भद्राणि मे दिशतु भार्गवनन्दनायाः।।६।।
प्राप्तं पदं प्रथमतः किल यत्प्रभावान्माङ्गल्यभाजि मधुमाथिनि मन्मथेन।
मय्यापतेत्तदिह मन्थमीक्षणार्ध मन्दालसं च मकरालयकन्यकायाः।।७।।
दद्याद्दयानुपवनो द्रविणाम्बुधारामस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे।
दुष्कर्मघर्मभपनीय चिराय दूरं नारायणप्रणयिनीनयनाम्बुवाहः।।८।।
इष्टा विशिष्टमतयोऽपि यया दयार्द्रदृष्ट्या त्रिविष्टपपदं सुलभं लभन्ते।
दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां पुष्टिं कृपीष्ट मम पुष्करविष्टरायाः।।९।।
गीर्देवतेति गरुडध्वजसुन्दरीति शाकम्भरीति शशिशेखरवल्लभेति।
सृष्टिस्थितिप्रलयकेलिषु संस्थितायै तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै।।१०।।
श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै रत्यै नमोऽस्तु रमणीयगुणार्णवायै।
शक्त्यैसोऽस्तु शतपत्रनिकेतायै पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै।।११।।
नमोऽस्तु लीकनिभाननायै नामोऽस्तु दुग्धोदधिजन्मभुत्यै।
नमोऽस्तु सोमामृतसोदरायै नमोऽस्तु नारायणवल्लभायै।।१२।।
सम्पत्कराणिसकलेन्द्रियनन्दनानि साम्राज्यदातानविभवानि सरोरूहाक्षि।
त्वद्वन्दनानि दुरिताहरणोद्यतानि मामेव मानिशं कलयन्तु मान्ये।।१३।।
यत्कटाक्षसमुपासनाविधिः सेवकस्य सकलार्थसम्पदः।
संतनोति वचनाङ्गमानसैस्त्वां मुरारिहृदयेश्वरीभजे।।१४।।

सरसिजनिलये सराजहस्ते धवलतमांशुकगन्धमाल्यशोभं।
भगवति हरिवल्लभे मनोज्ञे त्रिभूतिकरि प्रसीद मह्यम्।।१५।।
दिग्घस्तिभिःकनककुम्भमुखवसृष्टस्वर्वाहिनी विमलचारूजलप्लुताङ्गिम।
प्रतर्नमामि जगतां जननीमशेषलोकाधिना थगृहिणीममृताब्धिपुत्रीम्।।१६।।
कमले कमलाक्षवल्लभे त्वं करूणापुरतङ्गितैरपाङ्गै।
अवलोकय मामकिञ्चनानां प्रथमं पात्रमकृत्रिमं दयायाः।।१७।।
स्तुवन्ति ये स्तुतिभिनरमूभिरन्वहं त्रयीमयां त्रिभुवनामातरं रमाम्।
गुणाधिका गुरूतरभाग्यभागिनो भवन्ति ते मुवि बुधभाविताशयाः।।१८।।
।। श्रीभगवत्पादशंकरविरचितं कनकधरास्तोत्रं सम्पूर्णम।।

नोटः- इसके श्रद्धा-विश्वासपूर्वक अनुष्ठान से ऋणमुक्ति और लक्ष्मी-प्राप्ति होती है। कहा जाता है कि आचार्य श्रीशंकर ने इसका पाठ करके स्वर्णवर्षा करायी थी।

## २३-श्रीभगवतीस्तोत्रम्

जय भगवति देवि नमो वरदे, जय पापविनाशिनि नहुफलदे।
जय शुम्भनिशुम्भकपालधरे, प्रणामामि तु देवि नरार्तिहरे।।१।।
जय चन्द्रदिवाकरनेत्रधरे, जय पावकभूषितवक्त्रवरे।
जय भैवरदेहनिलीनपरे, जप अन्धकदैत्यविशोषकरे।।२।।
जय महिषविमर्दिनि शूलकरे, जय लोकसमस्तकपापहरे।
जय देवि पितामहविष्णुनते, जय भास्करशक्रशिरोऽवनते।।३।
जय षण्मुखसायुधईशनुते, जय सागरगामिनि शम्भुनुते।
जय दुःखदरिद्रविनाशकरे, जय पुत्रकलत्रविवृद्धिकरे।।४।।
जय देवि समस्तशरीरधरे, जय नाकविदर्शिनि दुःखहरे।
जय व्याधिविनाशिनि मोक्ष करे, जय वाञ्छितदायिनि सिद्धिवरे।।५।।

एतद्व्यासकृतं स्तोत्रं यः पठेन्नियतः शुचिः।
गृहे वा शुद्धभावेन प्रीता भगवती सदा।।६।।

इति व्यासकृतं श्रीभगवतीस्तोत्रं सम्पूर्णम्।

## कृष्णाष्टकम्

श्रीयाश्लिष्टो विष्णुः स्थिरचरवपुर्वेदविषयो
धियां साक्षी शुद्धो हरिरसुरहन्ताब्जनयनः।
गदी शङ्खीचक्री विमलवनमाली स्थिररुचिः
शरण्यो लाकेशो मम भवतु कृष्णोऽक्षिविषयः।।१।।

यतः सर्वं जातं वियदनिलमुख्यं जगदिदं
स्थितौ निःशेषं योऽवति निजसुखांशेन मधुहा।
लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः।।
।।शरण्यो।।२।।

असुनायम्यादौ यमनियममुख्यैः सुकरणै -
र्निरुध्येदं चित्तं हृदि विमलमानीय सकलम्।
यमीड्यं पश्यन्ति प्रवरमतयो मायिनमसौ।।
।।शरण्यो।।३।।

पृथिव्यां तिष्ठन् यो यमयति मही वेद न धरा
यमित्यादौ वेदो वदति जगतामीशममलम्।
नियन्तारं ध्येयं मुनिसुरनृणा मोक्षदमसौ।।
।।शरण्यो।।४।।

महेन्द्रादिर्देवो जपति दितिजान्यस्य बलतो
न कस्य स्वातन्त्र्यं क्वचिदपि कृतौ यत्कृतिमृते।
कवित्वादेर्गर्वं परिहरति योऽसौ विजयिनः।।
।।शरण्यो।।५।।

विना यस्य ध्यानं व्रजति पशुतां सूकरमुखां
विना यस्य ज्ञानं जनिमृतिभयं याति जनता।
विना यस्य स्मृत्या कृमिशतजनिं याति स विभुः।।
।।शरण्यो।।६।।

नरातङ्कोत्तङ्कः शरणशरणो भ्रान्तिहरणो
घनश्यामः कामो व्रजशिशुवयस्योऽर्जुनसखः।
स्वयम्भूर्भूतानां जनक उचिताचारसुखदः।।
।।शरण्यो।।७।।

यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी
तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः।
सतां धाता स्वच्छो निगमगणगीतो व्रजपतिः।।
।।शरण्यो।।८।।

इति हरिरखिलात्माराधितः शङ्करेण
श्रुतिविशदगुणोऽसौ मातृमोक्षार्थमाद्यः।
यतिवरनिकटे श्रीयुक्त आविर्बभूव
स्वगुणवृत उदारः शङ्खचक्राब्जहस्तः।।९।।
।।श्रीमच्छंकराचार्यकृतं कृष्णाष्टकं सम्पूर्णम्।।

## द्वादशज्योतिर्लिङ्गानि

सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम्।
उज्जयिन्यां महकालमोङ्कारममलेश्वरम्।।१।।
परल्यां वैद्यनाथं च डाकिन्यां भीमशङ्करम्।
सेतुबन्धे तु रामेशं नागेशं दारूकावने।।२।।
वाराणस्यां तु विश्वेशं त्र्यम्बकं गौतमीतटे।
हिमालये तु केदारं घुश्मेशं च शिवालये।।३।।

एतानि ज्योतिर्लिङ्गानि सायं प्रातः पठेन्नरः।
सप्तजन्मकृतं पापं स्मरणेन विनश्यति।।४।।

## मधुरांष्टकम्

अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम्।
हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम्।।१।।
वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम्।
चलित मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम्।।२।।
वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादो मधुरौ।
नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम्।।३।।
गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम्।
रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम्।।४।।
करणं मधुरं तरणं मधुरं हरणं मधुरं रमणं मधुरम्।
वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम्।।५।।
गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा।
सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम्।।६।।
गोपी मधुरा लीला मधुरा युक्तं मधुरं मुक्तं मधुरम्
दुष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम्।।७।।
गोपा मधुरा गावो मधुरं यष्टिर्मधुरा सृष्टिर्मधुरा।
दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम् ।।८।।

इति श्रीमद्वल्लभाचार्यकृतं मधुराष्टकं सम्पूर्णम्।

# ललितापञ्चकम्

प्रातः स्मरामि ललितावदनारविन्दं
विम्बाधरं पृथुलमौक्तिकशोभिनासम्।
आकर्णदीर्घनयनं मणिकुण्डलाढ्यं
मन्दस्मितं मृगमदोज्जवलभालदेशम्।।१।।

प्रातर्भजामि ललिताभुजकल्पवल्लीं
रक्ताङ्गुलीयलसदङ्गुलिपल्लवाढ्याम्।
मणिक्यहेमवलयाङ्गदशोभमानां
पुण्ड्रेक्षुचापकुसुमेषुसृणीदधानाम्।।२।।

प्रातर्नमामि ललिताचरणारविन्दं
भक्तेष्टदाननिरतं भवसिन्धुपोतम्।
पद्मासनादिसुरनायकपूजनीयं
पद्माङ्कुशध्वजसुदर्शनलाञ्छनाढ्यम् ।।३।।

प्रातः स्तुवे पराशिवांललितां भवानीं
त्रय्यन्तवेद्यविभवां करुणानवद्याम्।
विश्वस्य सृष्टिविलयस्थितिहेतुभुतां
विद्येश्वरीं निगमवाङ्मनसातिदुराम्।।४।।

प्रातर्वदामि ललिते तव पुण्यनाम
कामेश्वरीति कमलेति महेश्वरीति।
श्रीशम्भवीति जगतां जननी परेति
वाग्देवतेति वचसा त्रिपुरेश्वरीति।।५।।

यः श्लोकपञ्चकमिदं ललिताम्बिकायाः
सौभाग्यदं सुललितं पठति प्रभाते।
तस्मै ददाति ललिता झटिति प्रसन्ना
विद्यां श्रियं विमलसौख्यमनन्तकीर्तिम्।।६।।

इति श्रीमच्छङ्कराचार्यकृतं ललितापञ्चकं सम्पूर्णम्।

# श्रीसत्यनारायणाष्टकम्

आदिदेवं जगत्कारणं श्रीधरं लोकनाथं विभुं व्यापकं शङ्करम्।
सर्वभक्तेष्टदं मुक्तिदं माधवं सत्यनारायणं विष्णुमीशम्भजे।।१।।
सर्वदा लोककल्याणपारायणं देवगोविप्ररक्षार्थसद्विग्रहम्
दीनहीनात्मभक्ताश्रयं सुन्दरं सत्यं।।२।।
दक्षिणे यस्य गङ्गा शुभा शोभते राजते सा रमा यस्य वामे सदा।
यः प्रसन्नाननो भाति भव्यश्च तं सत्य०।।३।।
सङ्कटे सङ्गरे यं जनः सर्वदा स्वात्मभीनाशनाय स्मरेतु पीड़ितः।
पूर्णकृत्यो भवेद् यत्प्रसादाच्च तं सत्यं।।४।।
वाञ्छितं दुर्लभं यो ददाति प्रभु साधवे स्वात्मभक्ताय भक्तिप्रिय।
सर्वभूताश्रयं तं हि विश्वम्भरं सत्यं०।।५।।
ब्राह्मणः साधुवैश्यश्च तङ्गंध्वजो येऽभवन् विश्रुता यस्य भक्त्यामराः
लीलया यस्य विश्वं ततं तं विभुं सत्य।।६।।
येन चाब्रह्मबालतृणं धार्यते सृज्यते पाल्यते सर्वमेतज्जगत्।
भक्तभावप्रियं श्रीदयासागरं सत्य०।।७।।
सर्वकामप्रदं सर्वदा सत्प्रियं वन्दिनं देववृन्दैर्मुनीन्द्रार्चितम्।
सर्वकामप्रदं सर्वदा सत्प्रिय वन्दिनं देववृन्दैनीन्द्रार्चितम्।
पुत्रपौत्रादिसर्वेष्टदं शाश्वतं सत्यं।।८।।
अष्टकं सत्यदेवस्य भक्त्या नरः भावयुक्तो मुदा यस्त्रिसन्ध्यं पठेत्।
तस्य नश्यान्ति पापानी तेनाग्निना इन्धनानीव शुष्काणि सर्वाणि वै।।९।।
श्रीसत्यनाराणाष्टकं सम्पूर्णम्।।

# श्री कालभैरवाष्टकम्

देवराजसेव्यमानपावनङ्घ्रिपङ्कजं व्यालयज्ञसुत्रमिन्दुशेखरं कृपाकरम्
नारदादियोगिवृन्दवन्दितं दिगम्बरं काशिकापुराधिनाथकालभैरवं भजे।।१।।
भानुकोटिभास्वरं भवाब्धितारकं परं नीलकण्ठमीप्सितार्थदायकं त्रिलोचनम्।
कालकालमम्बुजाक्षमशूलमक्षरं काशिकापुराधिनाथकालभैरवं भजे।।२।।

शुलटकङ्पाशदण्डपाणिमादिकारणं श्यामकायमादिदेवमक्षरं निरामयम्।
भीमविक्रमं प्रभुविचित्रताण्डवप्रियं काशिकापुरराधिनाथकालभैरवं भजे।।३।।
भुक्तिमुक्तिदायकं प्रशस्तचारूविग्रहं भक्तवत्सलं स्थितं समस्तलोकविग्रहम्।
विनिक्वणन्मनोज्ञहेमाकिङ्कणीमसत्कटिं काशिकापुराधिनाथकालभैरवं भजे।।४।।
धर्मसेतुपालकं त्वधर्ममार्गनाशकं कर्मपाशमोचकं सुशर्मदायकं विभुम्।
स्वर्णवर्णशेपपाशशोभिताङ्गमण्डलं काशिकापुराधिनाथकालभैरवं भजे।।५।।
रत्नपादुकाप्रभभिरामपादयुग्मकं नित्यमद्वितीयमिष्टदैवतं निरञजनम्।
मृत्युदर्पनाशनं करालद्रंष्ट्रमोक्षणं काशिकापुराधिनाथकालभैरवं भजे।।६।।
अट्टाहासभिन्नपद्मजाण्डकोशसन्ततिं दृषिपातनष्टपापजालमुग्रशसनम्।
अष्ठसिद्धिदायकं कपालमालिकन्धरं काशिकापुराधिनाथकालभैरवं भजे।।७।।
भूतसंघनायकंविशालकीर्तिदायकं काशिवासलोकपुण्यपापशोधकं विभुम्
नीतिमार्गकोविदं पुरातनं जगत्पतिं काशिकापुराधिनाथकालभैरवं भजे।।८।।
कालभैरवाष्टकं पठन्ति ये मनोहरं ज्ञानमुक्तिसाधनं विचित्रपुण्यर्धनम्।
शोकमोहदैन्यलोभकोपतापनाशनं ते प्रयान्ति कालभैरवाङ्घ्रिसंनिधिं ध्रुवम।९।।
।।श्रीमच्छंकराचार्यविरचितं कालभैरवाष्टकं सम्पूर्णम्।।

## श्रीनवग्रहसतोत्रम्

जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम्।
तमोऽरि सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम्।।१।।
दधिशङ्खतुषाराभं क्षीरोदार्णवसम्भवम्।
नमामि शशिनं सोमं शम्भोर्मुकुटभुषणम्।।२।।
धरणीगर्भसम्भूतं विद्युत्कान्तिसमप्रभम।
कुमारं शक्तिहस्तं तं मङ्गल प्रणमाम्यहम्।।३।।
प्रियगूङ्कलिकाश्यामं रूपेणाप्रतिमं बधुम्।
सौम्यं सौम्यगुणोपेतं तं बुधं प्रणामाम्यहम्।।४।।
देवानां च ऋषीणां च गुरूं काञचनसंनिभम्।
बुद्धिभुतं त्रिलोकेशं तं नमामि बृहस्पतिम्।।५।।

हिमकुन्दमृणालाभं दैत्यानां परमं गुरूम।
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम्।।६।।
नीलाञ्जानसमाभासं रविपुत्रं यमाग्रजम्।
छायामार्तण्डसम्भूतं तं नमामि शनैश्वरम्।।७।।
अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम्।
सिंहिकागर्भसम्भूतं तं राहुं प्रणमाम्यहम्।।८।।
पलाशपुष्पसंकाशं तारकाग्रहमस्तकम्।
रौद्रं रौद्रात्मकं घोरं ते केतुं प्रणमाम्यहम्।।९।।
इति व्यासमुखोद्गीतं यः पठेतु सुसमाहितः।
दिवा वा यदि वा रात्रौ विघ्नशान्तिर्भविष्यति।।१०।।
नरनारीनृपाणां च भवेद्दुःस्वप्ननाशम्।
ऐश्वर्यमतुलं तेषामारोग्यं पुष्टिवर्धनम्।।११।।

।। महर्षिव्यासविरचितं नवग्रहस्तोत्रं सम्पूर्णम ।।

## ६३- श्रीसूर्यमण्डलाष्टकम्

नमः सवित्रे जगदेकचक्षुते जगत्प्रसूतिस्थितिनाशहेतवे।
त्रयीमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने।।१।।
यन्मण्डलं दीप्तिकरं विशालं रत्नप्रभं तीव्रमनादिरूपम्।
दारिद्र्यदुःखक्षयकारणं च पुनातु मां तत्सवितुर्वरेण्यम्।।२।।
यन्मण्डलंदेवगणैः सुपूजितंविप्रैःस्तुतं भावनमुक्तिकोविदम् ।
तं देवदेवं प्रणमामि सूर्यं पूनातु मां तत्सवितुर्वरेण्यम्।।३।।
यन्मण्डलं ज्ञानघनं त्वगम्यं त्रैलोक्यपूज्यं त्रिगुणात्मरूपम्।
समस्ततेजोमयदिव्यरूपं पुनातु मां तत्सवितुर्वरेण्यम्।।४।।
यन्मण्डलं गुढमतिप्रबोधं धर्मस्य वृद्धिं कुरूते जनानाम्।
यत्सर्वपापक्षयकारणं च पुनातु मां तत्सवितुर्वरेण्यम्।।५।।

यन्मण्डलं व्याधिविनाशदक्षं यदृग्यजु:सामसु संप्रगीतम्।
प्रकाशितं येन च भूभुर्वः स्वः पुनातु मां तत्सवितुर्वरेण्यम्।।६।।
यन्मण्डलं वेदविदो वदन्ति गायन्ति यच्चारणसिद्धसंघाः।
यद्योगिनो योगजुषां च संघाः पूनातु मां तत्सवितुर्वरेण्यम्।।७।।
यन्मण्डलं सर्वजनेषु पुजितं ज्योतिश्च कुर्यादिह मर्त्यलोके।
यत्कालकल्पक्षयकारणं च पुनातु मां तत्सवितुर्वरेण्यम्।।८।।
यन्मण्डलं विश्वसृजां प्रसिद्धमुत्पत्तिरक्षाप्रलयप्रगल्भम्।
यस्मिञ्जगत्संहरतेऽखिलञ्च पुनातु मां तत्सवितुर्वरेण्यम्।।९।।
यन्मण्डलं सर्वगतस्य विष्णोरात्मा परं धाम विशुद्धतत्त्वम्।
शुक्ष्मान्तरैर्योगपथानुगम्यं पुनातु मां तत्सवितुर्वरेण्यम्।।१०।।
यन्मण्डलं वेदविदो वदन्ति गायन्ति यच्चारणसिद्धसंघाः।
यन्मण्डलं वेदविदः स्मरन्ति पुनातु मां तत्सवितुर्वरेण्यम्।।११।।
यन्मण्डलं वेदविदोपगीतं यद्योगिनां योगपथानुगम्यम्।
तत्सर्ववेदं प्रणमासि सूर्यं पुनातु मां तत्सवितुर्वरेण्यम्।।१२।।

मंगलाष्टमिदं पुण्यं यः पठेत्सततं नरः।
सर्वपापविशुद्धात्मा सूर्यलोके महीयते।।१३।।

इति श्रीमदादित्यहृदये मण्डलाष्टकं सम्पूर्णम्।

●

## श्रीगङ्गाष्टकम्

मातः शैलसुतासपत्नि वसुधाशृङ्गारहारवलि
स्वर्गारोहणवैजयन्ति भवतीं भागीरथि प्रार्थये
त्वत्तीरे वसतस्त्वदम्बु पिबतस्त्वद्वीचिषु प्रेङ्खत-
स्त्वन्नाम स्मरतस्त्वदर्पितदृशः स्यान्में शरीरव्ययः।।१।।
त्वत्तीरे तरूकोटरान्तर्गतो गङ्गे विहङ्गो वरं
त्वन्नीरे नरकान्तकारिणि वरं मत्स्योऽथवा कच्छपः।

नैवान्यत्र मदान्धसिन्धुरघटासङ्घट्टघण्टारण-
त्कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भुपतिः ।।२।।
उक्षा पक्षी तुरग उरगः कोऽपि वा वारणो वा
वारीणः स्यां जननमरणक्लेशदुःखासहिष्णुः।
न त्वन्यत्र प्रविरलरणत्कङ्कणक्वाणमिश्रं
वारस्त्रीभिश्चमरमरुता वीजितो भुमिपालः।।३।।
काकैर्निष्कुषितं श्वभिः कवलितं गोमायुभिर्लुण्ठितं
स्त्रोतोभिश्चलितं तटाम्बुलुलितं वीचीभिरान्दोलितम्।
दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानः कदा
द्रक्ष्येऽहं परमेश्वरि त्रिपथगे भागीरथि स्वं वपुः।।४।।
अभिनवबिसवल्ली पादपद्मस्य विष्णो-
र्मदनमथनमौलेर्मालतीपुष्पमाला
जयति जयपताका काप्यसौ मोक्षलक्ष्म्याः
क्षपितकलिकलङ्का जाह्नवी नः पुनातु।।५।।
एतत्तालतमालसालसरलव्यालोलवल्लीलता-
च्छन्नं सूर्यकरप्रतापरहितं शङ्खेन्दुकुन्दोज्ज्वलम्।
गन्धर्वामरसिद्धकिन्नरवधुतुङ्गस्तनास्फालितं
स्नानाय प्रतिवासरं भवतु मे गाङ्गं जल निर्मलम्।।६।।
गाङ्गं वारि मनोहारि मुरारिचरणच्युतम्।
त्रिपुरारिशिरश्चारि पापहारि पुनातु माम् ।।७।।
पापापहारि दुरितारि तरङ्गधारि
शैलप्रचरि गिरिराजगुहाविदारि।
झङ्कारकारि हरिपादरजोऽपहारि
गाङ्गं पुनातु सततं शुभकारि वारि।।८।।
गङ्गाष्टकं पठति यः प्रयतः प्रभाते
वाल्मीकिना विरचितं शुभदं मनुष्यः

प्रक्षाल्य गात्रकलिकल्मषपङ्कमाशु
मोक्षं लभेत्पतति नैव नरो भवाब्धौ।।९।।
।।श्रीमहर्षिवाल्मीकिविरचितं गङ्गाष्टक सम्पूर्णम्।।

## गणेशपचंरत्नम्

मुदा करात्तमोदकं सदा विमुक्तिसाधकं
कलाधरावतंसकं विलासिलोकरञ्जकम्
अनायकैकनायकं विनाशितेभदैत्यकं
नताशुभाशुनाशकं नमामि तं विनायकम्।।१।।
नतेतरातिभीकरं नवोदितार्कभास्वरं
नमत्सुरारिनिर्जरं नताधिकापदुद्धरम्।
सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं
महेश्वरं तमाश्रये परात्परं निरन्तरम्।।२।।
समस्तलोकशङ्करं निरस्तदैत्यकुजरं
दरेतरोदरं वरं वरेभवक्त्रमक्षरम्।
कृपाकरं क्षमाकरं मुदाकरं यशस्करं
नमस्करं नमस्कृतां नमस्करोमि भास्वरम्।।३।।
अकिंचनार्तिमार्जनं चिरन्तनोक्तिभाजनं
पुरारिपुर्वनन्दनं सुरारिगर्वचर्वणम्।
प्रपचंनाशभीषणं धनञ्जयादिभूषणं
कपोलदानवारणं भजे पुराणवारणम्।।४।।
नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मज
मचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम्।
हृदन्तरे निरन्तरं वसन्तमेव योगिनां
तमेकदन्तमेव वं विचिन्तयामि संततम्।।५।।

महागणेशपचंरत्नमादरेण योऽन्वहं
प्रागायति प्रभातके हृदि स्मरन् गणेश्वरम्।
अरोगतामदोषतां सुसाहितीं सुपुत्रतां
समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात्।।६।।

।।श्रीमच्छङ्कराचार्यकृतं गणेशपंचरत्नस्तोत्रं सम्पूर्णम्।।

## गुर्वष्टकम् स्तोत्रम्

शरीरं सुरूपं तथा वा कलत्रं
यशश्चारूचित्रं धनं मेरूतुल्यम्।
गुरोरंघ्रिपद्मं मनश्चेन्न लग्नं ततः कि
ततः कि ततः कि ततः किम्।।१।।
कलत्रं धनं पुत्र-पौत्रादि-सर्व
गृहं बान्धवाः सर्वमेतद्धि जातम्।
गुरोरंघ्रिपद्मं मनश्चेन्न लग्नं ततः कि
ततः कि ततः कि ततः किम्।।२।।
षढङ्गदिवेदो मुखे शस्त्राविद्या
कवित्वादि गद्यं सुपद्य करोति।
गुरोरंघ्रिपद्यंम मनश्चेन्न लग्नंततः कि
ततः कि ततः कि ततः किम्।।३।।
विदेशेष मान्यः स्वदेशेषु धन्यः
सदाचारवृतेषु भक्तो न चाऽन्यः।
ततः कि ततः कि ततः किम्।।४।।
क्षममण्डले भूपभूपालवृन्दैः
सदासेवितयस्य पादारविन्दम्।

गुरोरंघ्रिपद्मंमेमनश्चेन्न लग्नं ततः कि
ततः कि ततः कि ततः किम।५।।
यशो मे गतं दिक्षुदानप्रतापा
ज्जगद्वस्तुसर्वंकरे यत् प्रासादात्।
गुरोरंघ्रिपद्मंम मनश्चेन्न लग्नं ततः कि
ततः कि ततः कि ततः किम्।।६।।
न भोगे न योगे न वा वाजिराजौ
न कान्तामुखे नैव वित्तेषु चित्तम।
गुरोरंघ्रिपद्मंम मनश्चेन्न लग्नं तत; कि
ततः कि ततः कि ततः किम्।।७।।
अरण्ये न वा स्वस्य गेहे न कार्ये
द देहे मनो यर्तते मे त्वनर्घ्ये।
गुरोरंघ्रिपद्मंम मनश्चेन्न लग्नं ततः किम्।।८।।
अनर्घ्याणि रत्नानि भुक्तानि सम्यक्
समालिङ्गता कामिनी यामिनीषु।
गुरोरष्टक यः पठेत् पुण्यदेही
तत; कि ततः कि ततः किम्।।९।।
यतीर्भुवतिर्ब्रह्मचारी च गेही
गुरोरष्टक यः पठेत् पुण्यदेही।
लभेत वाञ्छितार्थ पदं ब्रह्मसंज्ञं
गुरारूक्तावाक्यो मनो यस्य लग्नम्।।१०।।

इति श्रीमच्छकराचार्यविरचितं गुर्वष्टकं सम्पूर्णम्।

●

# गौरीशाष्टकम्

भज गौरीशं भजं गौरीशं गौरीशं भज मन्दमते। (ध्रुवपदम्)
जलभवदुस्तरजलधिसुतरणं ध्येयं चित्ते शिवहरचरणम्।।
अन्योपायं न हि न हि सत्यं गेयं शङ्कर शङ्कर नित्यम्।भज०।।१।।
दारापत्यं क्षेत्रं वित्तं देहं गेहं सर्वमनित्यम्।
इति परिभावय सर्वमसारं गर्भविकृत्या स्वप्नविचारम्।भज०।।२।।
मलवैचित्र्ये पुनरावृत्तिः पुनरपि जननीजठरोत्पत्तिः।
पुनरप्याशाकुलितं जठरं किं नहि मुञ्चसि कथयेश्चित्तम्।भज०।।३।।
मायाकल्पितमैन्द्रं जालं न हि तत्सत्यं दृष्टिविकारम्।
ज्ञाते तत्त्वे सर्वमसारं मा कुरु मा कुरु विषयविचारम् भज०।।४।।
रज्जौ सर्पभ्रमणारोपस्तद्वद्ब्रह्मणि जगदारोपः।
मिथ्यामायामोहविकारं मनसि विचारय बारम्बारम्। भज०।।५।।
अध्वरकोटीगङ्गागमनं कुरुते योगं चेन्द्रियदमनम्।
ज्ञानविहीनः सर्वमतेन न भवति मुक्तो जन्मशतेन। भज०।।६।।
सोऽहं हंसो ब्रह्मैवाहं शुद्धानन्दस्तत्त्वपरोऽहम्।
अद्वैतोऽहं सङ्गविहीने चेन्द्रिय आत्मनि निखिले लीने। भज०।।७।।

शङ्करकिङ्कर मा कूरू चिन्तां
चिन्तामणिना पिरचितमेतत्।
यः सद्भक्त्या पठति हि नित्यं
ब्रह्मणि लीनो भवति हि सत्यम्। भज०।।८।।

इति श्रीचिन्तामणिविरचितं गौरीशाष्टकं सम्पूर्णम्।

# काशीपञ्चकम्

मनोवृत्तिः परमापशान्ति सा तीर्थवर्या मणिकर्णिका च।
ज्ञानप्रवाहा विमलादिगङ्गा काशीकाऽहं निजबोधरूपा।।१।।

यस्यामिदं कल्पितमिन्द्रजालं
चराचरं भाति मानोविलासम्।
सच्चित्सुखैका परमात्मरूपा
सा काशिकाऽहं निजबोधरूपा।।२।।

कोशेषु पञ्चस्वधिराजमाना
बुद्धिर्भवानी प्रदिदेगेहम्।
साक्षी शिवः सर्वगतोऽन्तरात्मा
सा काशिकाऽहं निजबोधारूपा।।३।।

काश्यां हि काशते काशी
काशी सर्वप्रकाशिका।
सा काशी विदिता येन
तेन प्राप्ता हि काशिका।।४।।

काशी क्षेत्रं शरीर त्रिभुवनजननी व्यापिनी ज्ञानगङ्गा
भक्तिः श्रद्धा गयेयं निजगुरूचरणध्यानयोगः प्रयागः।
विश्वेशोऽयं तुरीय सकलजनमनः साक्षिभुतोऽन्तरात्मा
देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यम्किमस्ति।।५।।

(इति आदिशंकराचार्य कृतं काशीपञ्चकम्)

# श्रीशिवमानसपूजा

रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं
नानारत्नविभुषितं मृगमदामोदाङ्कितं चन्दाम्।
जातीचम्पकबिल्वपत्ररचितं पुष्पं च धुपं तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम्।।१।।
सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं
भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानकम्।
शाकानामयुतं जलं रूचिकर कर्पुरखण्डोज्जवलं
ताम्बुलं मनसा मया विरचितं भक्तया प्रभो स्वीकुरू।।२।।
छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं
वीणाभेरिमृदङ्गकाहलकला गीतं च नृत्यं तथा।
साष्टङ्गं प्रणातिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया
सङ्कल्पेन समर्पितं त्व विभो पुजा गृहाण प्रभो।।३।।
आत्मा त्वं गिरिजा मतिः सहचरा प्राणाः शरीरं गृहं
पूजा ते पिषयोपभोगरचना निद्रा समाधिस्थितिः।
सञ्चारः पदयो प्रदक्षिणविधिः स्तोत्राणि सर्वांगिरो
यद्यत्कर्म करामि तत्तदखिलं शम्भो तवराधनम्।।४।।
करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वापराधम्।
विहितमविहितं वा सर्वमेतत्क्षमस्व
जय जय करूणाब्धे श्रीमहादेव शम्भो।।५।।

।।इति श्रीमच्छकङराचार्यविरचिता शिवमानसपूजा समाप्त।।

# श्री विन्ध्येश्वरीस्तोत्रम्

निशुम्भमर्दिनी प्रचण्डमुण्डखण्डनीम्।।
तने रणेप्रकाशिनी भजामि विन्ध्यवासिनीम्।।१।।
त्रिशूलमुण्डधारिणी धराविघातहारिणीम्।
गृहे गृहे निवासिनी भजामि निन्ध्यवासिनीम्।।२।।
दरिद्रदुःखहारिणी सतां विभूतिकारिणीम्।
वियोगशोकहारिणी भजमि विन्धयवासिनीम्।।३।।
लसत्सुलोललोचनीं सदा सदा सरप्रदाम्।
कपालशुलधारिणी भजामि विन्ध्यवासिनीम्।।४।।
करे मुदा गदाधारी शिवां शिवप्रदायिनीम्।
वरां वरनानां शुभां भजामि विन्ध्यवासिनीम्।।५।।
ऋषीन्द्रजैमिनिप्रदां त्रिधास्यरूपधारिणीम्।
जले स्थले निवासिनी भजामि विन्ध्यवासिनीम्।।६।।
विशिष्टसृष्टिकारिणी विशालरूपधारिणीम्।
महोदरे विशलिनी भजामि विन्ध्यवासिनीम्।।७।।
पुरन्दरादिसेवितां मुरादिवंशखण्डनीम्।
विशुद्धशुद्धकारिणी भजामि विन्ध्यवासिनीम्।। ८।।

# महालक्ष्म्यष्टकम्

नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते।
शङ्खचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते।।१।।
नमस्ते गरूडारूढे कोलासुरभयङ्करि।
सर्वपापहरे देवि महालक्ष्मि नमोऽस्तु ते।।२।।

सर्वज्ञे सर्ववरदे सर्वदुष्टभयङ्करि।
सर्वदुःखहरे देवि महालक्ष्मि नमोऽस्तु ते।।३।।
सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनि।
मन्त्रपूते सदा देवि महालक्ष्मि नमोऽस्तु ते।।४।।
आद्यन्तरहिते देवि आद्यशक्तिमहेश्वरि।
योगजे योगसम्भूते महालक्ष्मि नमोऽस्तु ते।।५।।
स्थूलसूक्ष्ममहारौद्रे महाशक्तिमहोदरे।
महपापहरे देवि महालक्ष्मि नमोऽस्तु ते।।६।।
पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि।
परमेशि जगन्मातर्महालक्ष्मि नमोऽस्तु ते।।७।।
श्वेताम्बरधरे देवि नानालङ्कारभूषिते।
जगत्स्थिते जगन्मातर्महालक्ष्मि नमोऽस्तु ते।।८।।
महालक्ष्म्यष्टकं स्तोत्रं यः पठेद्भक्तिमान्नरः।
सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा।।९।।
एककाले पठेन्नित्यं महापापविनाशनम्।
द्विकालं यः पठेन्नित्यं धनधान्यसमन्वितः।।१०।।
त्रिकाल यः पठेन्नित्यं महाशत्रुविनाशनम्।
महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा।।११।।

इतीन्द्रकृतं महालक्ष्म्यष्टकं सम्पूर्णम्

## श्रीहनुमत्स्तोत्रम्

अतुलितबलधामं हेमशैलाभदेहं
दनुजवनकृशानुं ज्ञानिनामग्रगण्यम्।
सकलगुणनिधानं वानराणामधीशं
रघुपतिप्रियभक्तं वातजातं नमामि।।

हनुमानञजनीसूनुर्वायुपुत्रो महाबलः
रामेष्टः फाल्गुनसखः पिङ्गाक्षोऽमितविक्रमः।
उदधिक्रमणश्चैव सीताशोकविनाशकः।
लक्ष्मणप्राणदाता च दशग्रीवस्य दर्पहा।।
द्वदशैतानि नामानि प्रतरूत्थाय यः पठेत्।
नाशुभं जायते तस्य सर्वसम्पत्प्रजायते।।

## चाक्षुषेपनिषदं ( चाक्षुषी विद्या )

विनियोग--ऊँ अस्याश्चक्षुषीविद्याया अहिर्बुध्न्य ऋषिर्गायत्री छनदः सूर्यो देवता चक्षुरागनिवृत्तये विनियोगः।

ऊँ चक्षुः, चक्षुः तेजः स्थिारों भव। मां पाहि पाहि। त्वरितं चक्षूरोगान् शमय शमय। मम जातरूपं तेजो दर्शन। यथा अहम अन्धो न स्यां तथा कल्पय कल्पय। कल्याणं कुरू कुरू। यानि मम पूर्वजन्मापार्जितानि चक्षुः पतिरोधकदुष्कृतानि सर्वाणि निर्मूलय निर्मूलय।

ऊँ नमः चक्षुस्तेजोदात्रे दिव्याय भास्कराय। ऊँ नमः करूणकरायामृताय। ऊँ नमः सूर्याय। ऊँ नमो भगवते सूर्यायाक्षितेजसे नमः। खेचराय नमः। महते नमः। रजसे नमः। तमसे नमः। असतो मां सगदमय। तमसो मा ज्यातिर्गमय। मृत्योर्मा अमृतं गमय। उष्णो भगवाञ्छुचिरूपः। हंसो भगवान शुचिरप्रतिरूपः।

य इमां चक्षुष्मतीविद्यां ब्राहम्णो नित्यमधीते न तस्याक्षिरोगो भवति। न तस्य कुले अन्धो भवति। अष्टौ ब्राहम्णान् सम्यग् ग्रहायित्वा विद्यासिद्धिर्भवति। ऊँ नमो भगवते आदित्याय अहोवाहिनी अहावाहिनी स्वाहा।

।।श्रीकृष्णायजुर्वेदीया चाक्षुषी विद्या सम्पूर्णा।।

# काशी से बाहर (सामान) जाने का विधान

जो व्यक्ति काशीवास कर रहे हों तथा किसी कारण वश काशी के बाहर जाना तो उनके लिए यह विधान है-

काशीवासियों को जहाँ तक हो सके काशी से बाहर नहीं जाना चाहिए। यदि बहुत जरूरी हो तो निम्नांकित साधनों द्वारा जाकर तत्काल कार्य करके काशी आ जाना चाहिए। काशी से बाहर जाने के एक दिन पहले काशी की आज्ञा यात्रा करके आज्ञा लेकर बाहर जाने सब कार्य सिद्ध होते हैं।

प्रातः गंगा स्नान कर संध्या-तर्पण करने के पश्चात् अविमुक्तेश्वर ढुण्ढिराज साक्षी विनायक एवं अन्नपूर्णा और काशीविश्वनाथ भगवान का दर्शन पूजन कर आज्ञा लेने के पश्चात् नीचे लिखी सामग्री (चढ़ा हुआ प्रसाद) लेकर जाना चाहिए।

१. ढुण्ढिराज जी को चढ़ी हुई दूर्वा।
२. अन्नपूर्णा जी को चढ़ा हुआ सिन्दूर।
३. विश्वनाथ जी को चढ़ा हुआ बिल्वपत्र।
४. कालभैरव को चढ़ा हुआ भस्म जल।
५. जो अन्नपूर्णा जी में महाविष्णु जी हैं, उनको चढ़ा हुआ तुलसी दल साथ में लेकर जायँ और कार्य करके शीघ्र काशी आ जाना चाहिए। काशीवास करने वाले से देवता और पितर सब प्रसन्न होते हैं। पुत्र-पौत्र वं भक्तों को मोक्षदायिनी काशी में लाकर काशीवास करें करायें। काशी यात्रा करें। कहते हैं कि काशी कल्पवृक्ष है। इस लोक में धन, सम्पत्ति, सुख तथा शान्ति देती है। परलोक में कैवल्य मोक्ष प्राप्त कराती है। काशी तीनों लोकों से नारी है। काशी में तैंतीस कोटि देवता निवास करते हैं।

# जीवन-परिचय

## कर्मयोगी जीवन-मुक्त सन्त

## दण्डी स्वामी शिवानन्द सरस्वती जी का

पद्माकरं दिनकरो विकचं करोति।
चन्द्रो विकासयति कैरवचक्रवालम्।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परिहितेषु कृताभियोगाः।।

– भर्तृहरि (नीति शतक, ७४)

अपनी मातृभूमि भारतवर्ष एक पुरातन राष्ट्र है। आदिकाल से ही इस भूमि पर एक सुसंस्कृत समाज रहता आया है। यहाँ की राष्ट्रीयता की विशेषता है: 'आध्यात्मिकता'।

"एक ही आध्यात्मिक ध्वनि से स्पन्दित होने वाला यह भारत राष्ट्र है"– ऐसा स्वामी विवेकानन्द (१८६३-१९०२) का स्पष्ट कथन है। भारतवर्ष एक धर्मप्राण राष्ट्र है। अपने ऋषि-मुनियों के विचार और आचार के कारण इसे एक विचित्र पुण्यभूमि माना गया है। ऐसे कई महापुरूषों का जन्म इस भारतभूमि में हुआ है। इसी कारण भारत को 'बहुरत्न प्रसवी भारत' कहते हैं। हिमालय से लेकर कन्याकुमारी तक उच्चकोटि के चिन्तक महानुभावो के समान चिन्तन के कारण भारतवर्ष में भावनात्मक एकता प्रस्थापित हुई है। सम्पूर्ण भारत की धर्म-संस्कृति समान होकर भारत एक राष्ट्र बना। राजनैतिक दृष्टि से अन्यान्य प्रदेशों में अलग-अलग प्रकार की शासन व्यवस्था के होते हुए भी भारत सदियों से एक सांस्कृतिक एकता को जाग्रत एवं अक्षुण्ण रखने का श्रेय साधु-सन्तों, सन्यासियों आदि

आध्यात्मिक सत्पुरूषों को है। इन्हीं आध्यात्मिक सत्पुरूषों की मालिका में एक पुष्प हैं– अनन्त श्री विभूषित ब्रह्मनिष्ठ काशीस्थ सिद्ध सन्त दण्डी स्वामी शिवानन्द सरस्वती जी महाराज।

दण्डी स्वामी शिवानन्द सरस्वती जी बीसवीं शताब्दी के सुविख्यात सन्त धर्मसम्राट् दण्डी स्वामी हरिहरानन्द सरस्वती स्वामी करपात्री जी महाराज (१९०२-१९८२) के कृपापात्र शिष्य हैं और आपने सनातन धर्म के प्रचार-प्रसार में युगांतकारी योगदान किया है। विशेषकर समस्त सनातन धर्मशास्त्रो का मंथनकर काशी जी के प्रामाणिक इतिहास और माहात्म्य को ढूँढ़ निकालने में आपके योगदान को सदैव याद रखा जाएगा।

दण्डी स्वामी शिवानन्द सरस्वती जी का जन्म सन् १९३२ ई० में माघ शुक्ल बसन्त पंचमी, सरस्वती जन्मोत्सव के दिन प्रातः ७ बजे काशी के मणिकर्णिका घाट पर हुआ। ११ वें दिन रामप्रसाद कुल गुरु जिन्होंने नाम करण किया। शिवनारायण उपाध्याय नाम पड़ा। शिवनारायण जी के पिता जी अयोध्या हनुमानगढ़ी के रहने वाले थे। पिता जी का नाम भोला नाथ एवं माता जी का नाम उमादेवी था।

९ वर्ष की अवस्था में रामलीला में राम बनकर पाठ करते थे। सन् १९४० ई० में संस्कृत पाठशाला में संस्कृत पढ़ने के लिए प्रवेश किये। १० वर्ष की अवस्था में इनके पिताजी मर्णिकर्णिका घाट के पास ब्रह्मलीन हो गये, ११ वें दिन गौ, मकान, जमीन व सोना चाँदी आदि दान किये। शिवनारायन जी जब ११ वर्ष की अवस्था में आये तो कुश्ती के अखाड़ा में प्रवेश किये। कुश्ती, लाठी बन्दूक चलाना, गंगा में तैरना आदि शिक्षा प्राप्त किये।

सन् १९४८ ई० में अयोध्या के लक्ष्मण किला में अनन्त विभूषित करपात्री जी महाराज ने ब्रह्मचारी दीक्षा शिव नारायन जी को दिये। वहाँ इनका नाम शिव चैतन्य पड़ा। सन् १९४९ ई० में करपात्री जी महाराज ने योगानन्द जी को हरिद्वार में पत्र लिखकर (योगा) अष्टांग

योग की शिक्षा के लिए सन् १९४९ ई० में योगा आश्रम में गये। ६ माह में अष्टाङ्ग योग की शिक्षा प्राप्त करके घर आये।

सन् १९४८ ई० के आश्विन कृष्ण पक्ष द्वितीया तिथि के दिन कुल गुरू एवं माता जी आदि को साथ लेकर काशी, गया आदि तीर्थ यात्रा में गये। २५ दिन में साधु-सन्त और तीर्थ में स्नान तर्पण, पिण्डदान करके सन् १९५० ई० के फाल्गुन पक्ष द्वितीया तिथि के दिन में उपसानेश्वर के मन्दिर में शिव नारायन जी की माता उमा देवी कीर्तन सबके साथ कर रही थी। कीर्तन करते हुए उसी जगह बेहोश होकर मृत हो गई। माता जी का देहान्त होने के पश्चात ११-१२ वे दिन गौं, मकान, जमीन व सोना चांदी आदि ब्राह्मणों को भोजन कराकर दान दिये। शिवनारायन को बैराग्य हुआ।

वार्षिक श्राद्ध बर्सी करने के पश्चात् शिव चैतन्य जी को तीव्र बैराग्य उत्पन्न हुआ। अपना जमीन अपने कर्मचारियों को और गरीब वर्ग एवं अपने कुल पुरोहित आदि को (जमीन, मकान आदि) दान करके सन् १९५१ ई० बैशाख शुक्ल पक्ष अक्षय तृतीया तिथि के दिन अयोध्या में सर्व त्याग यज्ञ करके चल-अचल सब सम्पत्ति दान किये। और अपना वस्त्र सहित दान देकर मार्किन कपड़ा कटी वस्त्र लंगोटी और एक अचला को साथ में लेकर (सर्व त्याग यज्ञ करके) नंगे पाँव अयोध्या में गौ ब्राह्मण को आगे करके नागेश्वर के मन्दिर में दर्शन करने चले। हितैशी आंसू बहा रहे थे। नागेश्वर के दर्शन पूजन करके आज्ञा लेकर उत्तराखण्ड चले गये। गोरखपुर, नौतनवां, शिवपुर, नारायण गढ़ होते हुए देऊ घाट में राजगुरू देव बाबा के योगा आश्रम में पहुँचे। देव बाबा के चरणों में साष्टांग दण्डवत् किये देवबाबा बोले मैं बहुत दिनों से प्रतीक्षा कर रहा था। सत्संग कथा के पश्चात् देवबाबा जी बोले कृष्ण गन्डकी नदी में स्नान करके पूरे शरीर में भस्म लगा करके आवो शिव चैतन्य ब्रह्मचारी। स्नान करके भस्म सब शरीर

में लगाकर गुरु जी के पास में गये। गुरु जी तख्त (चौकी) में बैठे थे नजदीक में बुला कर मूत्र इन्द्रियों को दाहिने हाथ से मसल कर बोले आप विश्व में जा कर कहीं भी रह करके भजन करें ब्रह्मात्मा साक्षात्कार करो। काम-वासना तुम्हें नहीं सतायेगी और अनेक उपदेश दिये।

योगा आश्रम छूमैना में रहकर जप, अनुष्ठान, पुरश्चरण एवं ईश्वर की प्राप्ति के लिए शिक्षा प्राप्त किये। उपासना, साधना और अराधना की शिक्षा प्राप्त किये। गुरु जी बोले मैं जहाँ पर रहकर तपस्या किया हूँ आप वहीं सिद्ध गुफाओं में जाकर गायत्री पुरश्चरण करो। राज गुरू जी को प्रणाम करके गुरू जी के आज्ञा पाकर देऊघाट से सिद्ध गुफा की ओर चले। गन्डकि नदी के किनारे से मुक्ति नाथ जी के दर्शन करके धौला गिरी पर्वत के नीचे सिद्ध गुफा में जा रहे थे। मनुष्यों के बलिदान देने वाले दो कपाली मिले, उन्होंने कहा हम सिद्ध गुफा में पहुँचा देंगे कहते हुए एक आगे और दूसरा पीछे होकर चले। रास्ते में एक गुफा में ले गये मन्दिर के दर्शन करवाने के नाम से वहाँ पहुँचने पर माला पहिनाये और भस्म लगाये उसी क्षण एक व्यक्ति ने गर्दन को काटने के लिए तलवार उठाया, उसी समय स्वामी जी के कालभैरव की आवाज लगाते ही उसके हाथ से तलवार व आरी जमीन पर गिर गया। अन्य तीन व्यक्तियों ने स्वामी जी से क्षमा माँगना प्रारम्भ किया। उसके पश्चात् एक वृद्ध व्यक्ति ने गुफा में पहुँचाया। जो कपाली बलिदान दे रहे थे वही बह्मचारी जी का सेवक बने। उस दिन से गुफा से मनुष्यों का बलिदान देना बन्द हो गया।

गुफा में पहुँचते ही एक चमत्कार हुआ, नेपाल और चीन की सीमा में धौलागिरी पर्वत के नीचे वन देवी देवता की आवाज हिन्दी में सुनाई पड़ी। शिव चैतन्य ब्रह्मचारी जी हमारा घर यहीं पर है, हम आपकी रक्षा, सुरक्षा और व्यवस्था करेंगे।

आवाज सुनते ही गुफा के बाहर एक पत्थर को सजाकर वन देवी व वन देवता का मन्दिर बनाकर आवाह्न किये। बाद में अग्नि जलाकर उस रात्रि को जप, कीर्तन करते हुए जागरण किये। सन् ९१५३ ई० बैशाख शुक्ल पक्ष अक्षय तृतीया के दिन प्रातः ब्रह्मगायत्री पुरश्चरण प्रारम्भ किये। प्रतिदिन ५ हजार ब्रह्म गायत्री महामन्त्र का जप करने लगे। ११ बजे प्रतिदिन जप पुरा करके तर्पण, मार्जन, हवन, कर और जंगल में कन्द मूल फल और फलहार बनाने के लिए बिच्छू घास के कमल पत्ते, चिउटा से तोड़ कर पतिला में डाल करके नेपाली भाषा में सिस्नों (बिच्छू घास) को कहते हैं। पकाने के पश्चात वह विच्छू घास हलुवा जैसा बनता है वही खाकर बह्मचारी जी ८ वर्ष तक जंगल में रहे। बिच्छू घास से बना हुआ हलुवा का प्रसाद पाते थे।

गुफा के सामने के पहाड़ में ४ रीच रहते थे जो गर्जते थे और जंगल के पास में चीर के पेड़ में और गुफा में रहते थे परन्तु यह लोग रक्षा करते थे। कोई भी जानवर, बंदर गुफा के पास आते देखकर काऊँ-काऊँ आवाज करते थे परन्तु कभी भी अहित नहीं किये।

ब्रह्मगायत्री के पुरश्चरण शुरू करने के सातवे दिन १० बजे चोर लाठी लेकर गुफा में आये। ब्रह्मचारी जी जप कर रहे थे। सामान पैसा कहा रखे हो देखो कहते हुए चारो तरफ देखकर चोर चले गये। शिव चैतन्य ब्रह्मचारी जी जप पूरा करके गायत्री माता से प्रार्थना किये कि ऐसे चोर आयेंगे तो मां ब्रह्मगायत्री पुरश्चरण में विघ्न होगा। माँ कृपा करो कहते हुए प्रार्थना किये। दूसरे दिन प्रातः काले दो सांप गुफा में जाकर परिक्रमा करके बाहर रास्ते में रहने लगे। बिच्छू घास पत्ते तोड़ने और कन्द मूल तोड़ने जाते थे। उस समय वह नाग (साप) आगे आगे चलते थे और नाग देवता ब्रह्मचारी जी की रक्षा करते थे।

चार ब्रह्मगायत्री पुरश्चरण पूर्ण कर हवन करते ही रात्रि को उस दिन इष्ट देव बोले आप काठमाण्डू में पशुपति नाथ जी के दर्शन करके शिवपुरी में जाकर रामछड़ाक्षरी मंत्र का पुरश्चरण करो। इष्ट देव के आज्ञा पाते ही स्नान संध्या पूजा करके सिद्ध गुफा और बन देवी, बन देवता से आज्ञा लेकर धोलागिरी पर्वत से चले पड़े। पोखरा होते हुए बूढ़ी गंडकी नदी के किनारे पहुँचे। यहाँ पर एक चमत्कार हुआ नदी के किनारे पहुँचते ही अंधेरा हो गया था, ब्रह्मचारी जी नदी के टीला के ऊपर चढ़कर जोर से आवाज लगाये कि हम पशुपति नाथ जी का दर्शन करने जा रहे हैं और तीर्थ यात्री हैं, रात्रि हो गयी है और आँख से रास्ता दिखाई नहीं पड़ता जोर से बोले तब नदी पार से आवाज आया नेपाली भाषा में आप वहीं रूकें हम आपको लेने आ रहे हैं सुनाई पड़ा। कहते हैं कि तभी एक मशाल दिखायी पड़ा। वह मशाल नदी के किनारे आकर दूर से ही बोला कि हमारे पीछे-पीछे आइये कहकर आगे-आगे प्रकाश लेकर चल रहा था पीछे-पीछे शिव चैतन्य ब्रह्मचारी जी चल रहे थे। नदी पार करके मशाल गाँव के पास में गया। गाँव के पास में पहुँचते ही वह मशालधारी प्रकाश सहित आम के पेड़ के ऊपर चढ़ गया। पेंड़ के ऊपर मशाल को जाते हुए केदार नाथ पाण्डे जी ने देखा वह ब्रह्मचारी जी को लेने के लिए आ गये। पाण्डे जी बोले यह भूत-प्रेत मार देता है आपको गाँव में पहुँचा दिया यह आश्चर्य है। आप हमारे यहाँ चलिए। उनके गोशाला में रात्रि में रहकर दूसरे प्रातः, स्नान, संध्या, तर्पण करके ब्रह्मचारी जी काठमांडू पशुपति नाथ जी के दर्शन करने पहुँचे। पशुपति नाथ जी के दर्शन करके बांसू की गुफा में रहकर साधु सन्त और तीर्थ मन्दिर के दर्शन करते हुए १५ दिन रहकर बासू की गुफा से बागमति के सिर पर गोमुख के ऊपर शिवपुरी में जाकर कुटिया में मन्त्र का सन् १९७०ई० में ज्येष्ठ शुक्ल दशमी तिथि गंगा दशहरा के दिन राम छड़ाक्षरी मन्त्रका पुरश्चरण जप अनुष्ठान करने लगे। पुरश्चरण पूर्ण

करके सन् १९७१ ई० के आश्विन शुक्ल पक्ष विजय दशमी के दिन प्रातः मन्दिर वनदेवी एवं वनदेव से आज्ञा लेकर कुटिया को प्रणाम करके इष्टदेव की आज्ञानुसार तीर्थ मन्दिर सन्त महात्माओं के दर्शन करते हुए काठमाण्डू से गोरखपुर के गीता वाटिका में सन्त राधा स्वामी और हनुमान प्रसाद जिनके सान्निध्य में १५ दिन रह करके सत्संग प्राप्त करके हरिद्वार के कनखल में आनन्द मणि आश्रम में आनन्द मणि देवी के सान्निध्य में रहकर सत्संग एवं भक्ति प्राप्त करके बद्री नारायन, विष्णु भगवान का दर्शन करके भृगु गुफा में जाकर सन् १९७१ ई० के मार्गशीर्ष कृष्ण पक्ष भैरवाष्टमी तिथि के दिन प्रातः ९ बजे 'नमो भगवते वासुदेवाय'। विष्णु महामन्त्र का पुरश्चरण प्रारम्भ किये और पुरश्चरण पूर्ण करके सन् १९७२ ई० को भारत और नेपाल के तीर्थ यात्रा प्रारम्भ किये। आषाढ़ मास शुक्ल पक्ष पूर्णिमा के दिन प्रातः ९ बजे पुरश्चरण पूर्ण करके गौरीकुण्ड होते हुए केदार नाथ जी दर्शन करके बगल के कुटिया में सन् १९७४ के बैशाख शुक्ल पक्ष अक्षय तृतीया के दिन प्रातः ८ बजे नमः शिवाय महामन्त्र का पुरश्चरण प्रारम्भ किये। पुरश्चरण पूर्ण करके केदारनाथ से गौरी कुंड होते हुए बद्री नारायन जी का पुनः दर्शन करके भृग गुफा पहुँचे।

भृगु गुफा में रहकर पुनः विष्णु महामन्त्र का जप सन् १९७६ ई० के आषाढ़ शुक्ल पक्ष गुरू पूर्णिमा के दिन पुरश्चरण प्रारम्भ किये जिस दिन पुरश्चरण पूर्ण हुआ उसी दिन रात्रि के स्वप्न में काशी विश्वनाथ जी का दर्शन करके काल भैरव के दर्शन कर रहे थे वही पर इष्ट देव बैठे हुए थे। आप कहाँ हैं कशी आकर काशी वास करिये, सुनते ही स्वप्न से जगे। प्रातः बद्री नरायन भगवान का दर्शन कर आज्ञा लेकर सन् १९७९ ई० के माघ शुक्ल द्वितीया तिथि के दिन स्नान संध्या तर्पण करके महेश्वर मन्दिर के बगल में बैठकर ॐ नमः शिवाय महामंत्र का जप कर रहे थे। रात्रि ११ बजे एक ५ वर्ष की कन्या मालपुआ, खीर पत्तल में ब्रह्मचारी जी के आगे रखकर

संस्कृत भाषा में बोली प्रसाद खाओ ज्ञान होगा कहकर अदृश्य हो गयी। प्रसाद पाते ही वेदान्त का ज्ञान होने लगा और वे आनन्द में डूब गये। दूसरे दिन प्रातः स्नान संध्या तर्पण कर हवन कर रहे थे उसी समय एक जटाधारी महात्मा आ गये। ब्रह्मचारी जी आपको काशी का दर्शन कराऊंगा चलो कहते ही साथ में चल दिये। नौका में गंगा जी के बीचो-बीच पहुँचने के पश्चात महात्मा जी बोले कि पश्चिम की तरफ मुँह करके काशी का दर्शन करो। पश्चिम की तरफ देखा प्रकाश में सोना जैसा प्रकाश ५ मिनट तक दर्शन हुआ। उसके पश्चात् दर्शन कराने वाले जटाधारी महात्मा अदृश्य हो गये। दर्शन के पश्चात् काशी विश्वनाथ जी के दर्शन करके दण्डी स्वामी, श्री हरिहरानन्द सरस्वती करपात्री जी के दर्शन करने के लिए केदार घाट के करपात्री मठ में गये। करपात्री जी महाराज को साष्टांग दण्डवत करते ही गुरु जी बोले आज ही संन्यास लेने का मुहूर्त्त है। राम चैतन्य ब्रह्मचारी जी से श्री जोखन राम अग्निहोत्री जी को बुलाकर लाने को कहे और दर्शन, पूजन करके ज्ञानवापी संन्यास यज्ञ प्रारम्भ हुआ। जोखन राम एवं बलराम पाण्डे विद्वान् के द्वारा संन्यास महायज्ञ सम्पन्न हुआ।

सन् १९७९ ई० की माघ शुक्ल पक्ष बसन्त पंचमी तिथि के दिन ११ बजे संन्यास की दीक्षा प्राप्त हुई। अनन्त श्री विभूषित धर्म सम्राट हरिहरानन्द सरस्वती जी संन्यास दिये। दण्डी स्वामी शिवानन्द सरस्वती नाम पड़ा।

**जीवन परिचय, गुरुकृपा और शक्तिपात-**

सन् १९८१ ई० में फाल्गुन कृष्ण त्रयोदशी तिथि के दिन प्रातः ९ बजे स्वामी श्री हरिहरानन्द सरस्वती (करपात्रीजी महाराज) जी की पूजा करके रुद्राभिषेक करने के पश्चात् दण्डी स्वामी शिवानन्द सरस्वती जी उन्हें साष्टाङ्ग दण्डवत् किये। इसके बाद करपात्री जी महाराज उनकी ओर देखकर बोले- आज से जीवन पर्यन्त काशीवास

करो, काशी की पञ्चक्रोशी यात्रा, अन्तर्गृही आदि यात्रा करो। आजीवन काशी-गौरव एवं काशी की महिमा, काशी माहात्म्य और काशी दर्शन लिखो। स्वामी शिवानन्द सरस्वती बोले– मैं अनपढ़ हूँ, हस्ताक्षर करने नहीं आता है। करपात्री जी महाराज बोले– आपको सब विद्या आ जायेगी, कहते हुए नजदीक में बुलाकर अपना दाहिना हाथ स्वामीजी के सिर पर रखे। स्वामी जी पर उसी क्षण गुरुजी ने शक्तिपात करा दी। उसी समय से स्वामी शिवानन्द सरस्वती जी को वेद, वेदान्त एवं धर्मशास्त्र के मन्त्र और श्लोक देखते ही उनके अर्थ समझ में आने लगे। शिव प्रसाद उपाध्याय जी (कुलपति) बोले कि मैंने वेद और धर्मशास्त्र में शक्तिपात का वर्णन पढ़ा और सुना था, पर आज यह चमत्कार प्रत्यक्ष देखने को मिला, क्योंकि मैं वहीं पर बगल में बैठ कर देख रहा था।

सन् १९७९ ई० के महाशिवरात्रि के दिन एक बजे केदार घाट में बैठक करके काशी प्रदक्षिणा दर्शन, पूजन यात्रा नामक समिति बनायी और स्वयं अध्यक्ष बने। उस दिन केदारेश्वर के दर्शन करके केदारेश्वर अन्तर्गृही यात्रा प्रारम्भ किये। 'हरहर महादेव शम्भो, काशी विश्वनाथ गंगे' कीर्तन करते हुए। प्रत्येक मन्दिर का दर्शन-पूजन करते हुए चलें। अनेक अधिकारीगण और काशी के विद्वान् केदारेश्वर अन्तर्गृही यात्रा कर रहे थे। दण्डी स्वामी शिवानन्द सरस्वती जी सन् १९७९ ई० से २५-१०-२०१० तक अन्तर्गृही पञ्चक्रोशी आदि यात्रा यात्रियों को कराते हैं और स्वयं करते हैं। गुरु जी की आज्ञा से काशी में क्षेत्र संन्यास लेकर काशीवास करते हैं और काशी के अन्तर्गृही, पञ्चक्रोशी आदि यात्रा यात्रियों को कराते हैं। ८० वर्ष की अवस्था में भी यात्रा दर्शनार्थियों को कराते हैं और स्वयं करते हैं। गुरु जी की आज्ञा से काशीवास करते हुए दण्डी स्वामी शिवानन्द सरस्वती जी इष्ट देव की आज्ञा से तत्कालीन जिलाधीश नितिन रमेश गोकर्ण जी से अनुमति लेकर काशी की वृहत् चौरासी कोश की यात्रा

और दि० १५-०२-२०१० ई० को काशी के बांस फाटक फूल मण्डी, ज्ञानवापी, विश्वनाथ आदि विशेश्वर मन्दिर से प्रातः ९ बजे काशी की चौरासी कोश परिक्रमा यात्रा दण्डी स्वामी शिवानन्द सरस्वती जी अपने दण्डी स्वामी, ब्रह्मचारी, विद्यार्थी और भक्तों को साथ में लेकर प्रत्येक पड़ाव में रुकते हुए प्रतिवर्ष १२वें दिन काशी विश्वनाथ जी का दर्शन कर यात्रा पूर्ण किए।

सन् १९७९ से आज २५-१०-२०१० तक काशी की चौरासी कोश परिक्रमा यात्रा एवं माघ में प्रयागराज स्नान दर्शन मेला क्षेत्र में पण्डाल लगता है और काशी में पञ्चक्रोशी अन्तर्गृही आदि काशी की सम्पूर्ण यात्रा परिक्रमा दर्शन, पूजन यात्रा अखण्ड चल रही है।

इस तरह दण्डी स्वामी शिवानन्द जी महाराज के द्वारा अनेक चमत्कारिक कार्य किये गये हैं। आज भी अनेक चमत्कारिक कार्य कर रहे हैं।

–शिवप्रसाद उपाध्याय (कुलपति)

भिक्षुकाः नहि याचन्ते बोधयन्ति दिने-दिने।
दातव्यमिति दातव्यं अदत्तेमादृशी गतिः।।

अर्थ– कोई भिक्षुक आपके पास माँगने आता है तो आप को बोध कराता है माँगता नहीं, यदि आप उसको नहीं देते तो कहता है कि देखो, हम नहीं दिये हैं इसलिए मैं माँग रहा हूँ। यदि आप नहीं देंगे तो आप की भी यही गति होगी। ये कहकर चला जाता है।

●

# अनन्त श्रीविभूषित अभिनव शङ्कर ब्रह्मलीन सिद्धसन्त धर्मसम्राट स्वामी करपात्री जी महाराज की पुस्तकें

१. वेदार्थ परिजात
२. गोपी गीत
३. भ्रमर गीत
४. पूंजीवाद
५. विचार-पीयूष
६. रामायण मीमांशा
७. श्री राधा सुधा
८. भक्ति-सुधा
९. शंका-सुधा
१०. बदलती दुनिया
११. तिथ्यादी-निर्णय
१२. कुम्भ निर्णय
१३. वेदान्त-प्रश्नोत्तरी
१४. प्रवचन-पीयूष
१५. दश-नामापराध
१६. भक्ति रसार्णव
१७. मार्क्सवाद और रामराज्य
१८. राहुल जी की भ्रान्ति
१९. मार्क्स और ईश्वर
२०. रास और प्रयोजन
२१. अभिनव करपात्री
२२. श्री करपात्री संस्मरण
२३. करपात्री एक अध्ययन
२४. श्री विद्या रतनाकर
२५. श्री विद्या वरिवस्या
२६. वेदस्वरूप विमर्श
२७. वेद प्रमाण्य मीमांशा
२८. सर्व सिद्धान्त समन्वय
९. नास्ति-अस्तिवाद
३०. प्रवचन संग्रह
३१. गीता के हुकुमनामा
३२. आदर्श विचार
३३. वेद का स्वरूप और प्रामाण्य
३४. अहमर्थ और परमार्थ सागर
३५. संकीर्तन मीमांशा और वर्णाश्रम
३६. धर्म-संघर्ष और शान्ति
३७. समाजवाद और रामराज्य
३८. क्या संभोग से समाधि?
३९. अभिनव शंकर स्वामी करपात्री
४०. विश्वराष्ट्र और संस्कृति
४१. विदेश यात्रा और शास्त्रीय पक्ष
४२. रामायण महाभारत काल-मीमांशा
४३. गीता जयन्ती और मीज्मो-क्रान्ति
४४. राष्ट्रीय स्वयंसेवक संघ और हिन्दू धर्म
४५. वेदान्त रससागर और विभीषण शरणागति
४६. सनातन संविधान एवं राजनीति में अधिकार
४७. शुक्ल युजर्वेद संस्कृति हिन्दी टीका
४८. करपात्र चिन्तन

# दण्डी स्वामी शिवानन्द सरस्वती जी के करकमलों द्वारा रचित पुस्तकों के नाम निम्न हैं-

हिमालय प्रेस में छपी पुस्तकों का नाम- १. काशी की महिमा, २. काशी मोक्ष निर्णय, ३. काशी का इतिहास, ४. वाराणसी प्रदक्षिणा यात्रा, ५. पञ्चक्रोशी यात्रा, ६. काशी दर्शन, ७. काश्यां मरणान्मुक्ति, ८. सिद्ध सन्तों का चमत्कार, ९. काशी में सिद्ध शिवलिङ्गों का चमत्कार, १०. काशी में सोमवार से रविवार तक के वार यात्रा, ११. काशी का लघु माहात्म्य, १२. काशी की वार्षिक यात्रा, १३. राम नाम की महिमा, १४. एक दिव्य जीवन दर्शन, १५. काशी की पञ्चक्रोशी यात्रा माहात्म्य, १६. काशी में प्रत्येक तिथि के दिन एक वर्ष तक नेम से दर्शन यात्रा महात्म्य, १७. धर्म सम्राट स्वामी करपात्री जी महाराज के यज्ञ का चमत्कार और जीवन दर्शन, १८. संन्यास ग्रहण पद्धति - यह सभी पुस्तक हिमालय प्रेस में छपे हैं, काशी माहात्म्य-श्री सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी से प्रकाशित हुआ है। १९. काशी गौरव, २०. वाराणसी माहात्म्य, २१. काशी दिव्य दर्शन, २२. काशी का माहात्म्य, २३. कामधेनु कलि काशी पञ्चक्रोशी माहात्म्य, २४. लोलार्क कुण्ड दर्शन स्नान महिमा, २५. काशी खण्डोक्त काशी दर्शन, २६. काशी की चौरासी कोस परिक्रमा यात्रा दर्शन पूजन माहात्म्य-काबरा आफसेट्स, २७. काशी वैभव २८. काशी दर्शन, -काबरा आफसेट्स, रवीन्द्रपुरी कालोनी है।

शीघ्र प्रकाशित होने वाली पुस्तकें- २९. काशी रहस्य भाषा टीका हिन्दी, ३०. शिवरहस्य हिन्दी भाषा टीका, ३१. स्वामी शिवानन्द सरस्वती का जीवन दर्शन।

दण्डी स्वामी शिवानन्द सरस्वती जी की रचित पुस्तकों का प्राप्ति स्थान-

१. धर्म संघ, दुर्गाकुण्ड २. करपात्री धाम मठ, केदारघाट, ३. काशी विश्वेश्वर (व्यक्तिगत) मन्दिर, मीरघाट, चौखम्बा संस्कृत भवन, एवं संकटा प्रसाद, कचौड़ीगली, चौक आदि में प्राप्त होंगे।

## शान्त्याशीर्वादः

ॐ सहनाववतु। सह नौ भुनक्तु। सह वीर्यंकरवावहै।
तेजस्विनावधीतमस्तु, मा विद्विषवहै।।
सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः।।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःख भाग भवेत्।।
ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।।
ॐ शान्तिः शान्तिः शान्तिः सुशान्तिर्भवतु

•

# सङ्कटनाशनगणेशस्तोत्रम्

## नारद उवाच

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् ॥
भक्तावासं स्मरेन्नित्यमायुःकामार्थसिद्धये ॥१॥
प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् ॥
तृतीय कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥२॥
लम्बोदरं पञ्चमं च षष्ठं विकटमेव च ॥
सप्तमं विघ्नराजं च धूम्रवर्णं तथाष्टमम् ॥३॥
नवमं भालचन्द्रं च दशमं तु विनायकम् ॥
एकादशं गणपतिं द्वादशं तु गजाननम ॥४॥
द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः ॥
न च विघ्नभयं तस्य सर्वसिद्धिकरं प्रभो ॥५॥
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ॥
पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ॥६॥
जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् ॥
संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥७॥
अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत् ॥
तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ॥८॥

इति श्रीनारदपुराणे सङ्कटनाशनगणेशस्तोत्रं सम्पूर्णम्